सम्प्राप्य कौरवाणां धुरन्धरः किमचेष्टत गाङ्गेयो महाबुद्धि-पराक्रमः ॥ ४ ॥

वैशम्पायन उवाच । ततस्तत् सञ्जयस्तस्मै सर्वमेव न्यवेदयत् । यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ॥ ५ ॥

सञ्जय उवाच । सैनापत्यमनुप्राप्य भीष्मः शान्तनवो नृप । दुर्य्योधनमुवाचेदं वचनं हर्षयन्निव ॥ ६ ॥ नमस्कृत्य कुमाराय सेनान्ये शक्तिपाणये । अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः ॥ ७ ॥ सेनाकर्मण्यभिज्ञोऽस्मि व्यूहेषु विविधेषु च । कर्म कारयितुञ्चैव भृतानप्यभृतांस्तथा ॥ ८ ॥ यात्रायाने च युद्धे च तथा प्रशमनेषु च । भृशं वेद महाराज यथा वेद बृहस्पतिः ॥ ९ ॥ व्यूहानाञ्च समारम्भान् दैवगन्धर्वमानुषान् । तैरहं मोहयिष्यामि पाण्डवान् व्येतु ते ज्वरः ॥ १० ॥ सोऽहं योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीम् । यथावत् शास्त्रतो राजन् व्येतु ते मानसो ज्वरः ॥ ११ ॥

दुर्य्योधन उवाच । विद्यते मे न गाङ्गेय भयं देवासुरेष्वपि । समस्तेषु महाबाहो सत्यमेतत् ब्रवीमि ते ॥ १२ ॥ किं पुनस्त्वयि दुर्द्धर्षे सैनापत्ये व्यवस्थिते । द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभिनन्दिनि ॥ १३ ॥ भवद्भ्यां पुरुषाग्र्याभ्यां स्थिताभ्यां विजयो मम । न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवम् ॥ १४ ॥ रथसङ्ख्यान्तु कार्त्स्न्येन परेषामात्मनस्तथा । तथैवातिरथानाञ्च वेत्तुमिच्छामि कौरव ॥ १५ ॥ पितामहो हि कुशलः परेषामात्मनस्तथा । श्रोतुमिच्छाम्यहं सर्वैः सहैभिर्वसुधाधिपैः ॥ १६ ॥

भीष्म उवाच । गान्धारे शृणु राजेन्द्र रथसङ्ख्यां स्वके बले । ये रथाः पृथिवीपाल तथैवातिरथाश्च ये ॥ १७ ॥ बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च । रथानां तव सेनायां यथा मुख्यन्तु मे शृणु ॥ १८ ॥ भवानग्रे रथोदारः सह सर्वैः सहोदरैः ।

दुःशासनप्रभृतिभिर्भ्रातृभिः शतसम्मितैः॥ १९ ॥ सर्वे कृतप्रहरणाश्छेद्यभेद्यविशारदाः। रथोपस्थे गजस्कन्धे गदाप्रासासिचर्मणि॥ २०॥ संयन्तारः प्रहन्तारः कृतास्त्रा भारसाधनाः। इष्वस्त्रे द्रोणशिष्याश्च कृपस्य च शरद्वतः॥ २१॥ एते हनिष्यन्ति रणे पञ्चालान् युद्धदुर्मदान्। कृतकिल्बिषाः पाण्डवेयैर्धार्त्तराष्ट्रा मनस्विनः॥ २२॥ ततोऽहं भरतश्रेष्ठ सर्वसेनापतिस्तव। शत्रून् विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवम्॥ २३॥ न त्वात्मनो गुणान् वक्तुमर्हामि विदितोऽस्मि ते। कृतवर्मा त्वतिरथो भोजः शस्त्रभृतां वरः॥ २४॥ अर्थसिद्धिं तव रणे करिष्यति न संशयः। शस्त्रविद्भिरनाधृष्यो दूरपाती दृढायुधः॥ २५॥ हनिष्यति चमूं तेषां महेन्द्रो दानवानिव। मद्रराजो महेष्वासः शल्यो मेऽतिरथो मतः॥ २६॥ स्पर्द्धते वासुदेवेन नित्यं यो वै रणे रणे। भागिनेयान्निजांस्त्यक्त्वा शल्यस्ते राजसत्तमः॥ २७॥ एष योत्स्यति संग्रामे पाण्डवांश्च महारथान्। सागरोर्म्मिसमैर्बाणैः प्लावयन्निव शात्रवान्॥ २८॥ भूरिश्रवाः कृतास्त्रश्च तव चापि हितः सुहृत्। सौमदत्तिर्महेष्वासो रथयूथपयूथपः॥ २९॥ बलक्षयममित्राणां सुमहान्तं करिष्यति। सिन्धुराजो महाराज मतो मे द्विगुणो रथः॥ ३०॥ योत्स्यते समरे राजन् विक्रान्तो रथसत्तमः द्रौपदीहरणे राजन् परिक्लिष्टश्च पाण्डवैः॥ ३१॥ संस्मरंस्तं परिक्लेशं योत्स्यते परवीरहा। एतेन हि तदा राजंस्तप आस्थाय दारुणम्॥ ३२॥ सुदुर्लभो वरो लब्ध· पाण्डवान् योद्धुमाहवे। स एष रथशार्दूलस्तद्वैरं संस्मरन्रणे। योत्स्यते पाण्डवैस्तात प्राणांस्त्यक्त्वा सुदुस्त्यजान्॥ ३३॥

इति उद्योगपर्वणि रथातिरथसङ्ख्यानपर्वणि कौरवरथातिरथसङ्ख्यायां चतुःषष्ट्यधिकशततमोऽध्यायः॥ १६४॥

---

महाभारतस्य तृतीयसंस्करणम् ।

पूर्वं यथा सम्भावितम् द्वितीयसंस्करणे मुद्रितान्यपि यावन्ति पुस्तकानि अचिरेणैव शेषतामुपगतानि। पुस्तकार्थञ्चाद्यापि सुधियः साग्रहं समावेदयन्ति। अनुरुद्धैरेव तयास्माभिर्भारतस्य तृतीयसंस्करणमारब्धम्। अर्थिनः तूर्णमावेदयन्त्विति विज्ञापयामः।

श्रीप्रतापचन्द्र रायः सि, आइ, इ।

---